# अथर्वप्रातिशाख्यम्

अथातो न्यायाध्ययनस्य पार्षदं वर्तयिष्यामः १ पदानां संहितां विद्यात् २ पदविधिरिति ३ द्विरुदात्तं बृहस्पत्यादीनाम् ४ प्रत्यञ्चां द्वे उपोत्तमे ५ अवर्णमध्य आकार एकादेशे विशेषः ६ अवर्णान्ताच्च ७ इकारादौ च ८ एकारादौ च ९ कृदन्ते द्व्युपसर्गे १० गतिपूर्वो यदा धातुः ११ उपसर्गपूर्वमाख्यातम् १२ वचने वचने पूर्वम् १३ एकेन द्वे १४ द्विनतिकानि वा १५ परकारणानि १६ परयोगीनि १७ अर्धपादादिषूदात्तमाख्यातमामन्त्रितं पदम् १८ व्याघ्रादीन्यनुदात्तानि पादादीनामपोदितम् १९ वाक्यविपर्यये पदलोपेषु पादादिवत्स्वरः २० चयोगादनिघातः २१ वायोगादनिघातः २२ आमन्त्रितादाद्युदात्तात् २३ लुप्तकरणान्यकरणानि वा २४ अन्ययोगादनिघातः २५ नहीत्यनेन युक्तानि २६ यदित्येनेन समस्तेन २७ वचनात्परेण च सर्वत्र युक्तं वापवादो वा लुप्तं वा तत्पदं येन योगः २८

इति प्रथमः पादः

द्विषो बहुवचनम् २९ आमन्त्रितं दैवं दैवीरिति सर्वत्र ३० अर्धस्यासमविभागे ३१ नपुंसकम् तस्येदमिति वा जातिरन्तोदात्तम् ३२ द्वितीयोदात्तानि ३३ अकारात्प्रतिषेधात्परमुदात्तमजरादीनामिति ३४ अकारान्तो ब्रह्मा ब्रह्मण इत्यस्मिन्नर्थे ३५ नपुंसकमाद्युदात्तं ब्रह्म ३६ अन्तोदात्तानि ३७ काव्येति संज्ञायामग्रन्थे ३८ दक्षिणा तद्धितान्तम् ३९

आशामाशिषि ४० अर्वाचीनमिति प्रत्ययान्तरं वा ४१ महो देवस्य महतो देवस्येति ४२ तवर्णलोपोऽन्तोदात्तत्वं च ४३

इति द्वितीयः पादः

पूर्वपदप्रकृतिस्वरस्तस्यापवादः ४४ अनुदात्तानि ४५ आ-ख्यातानि नामसदृशानि ४६ कमिति निपातः ४७ यथेति निपातः ४८ आख्यातान्युपसर्गसदृशानि ४९ आमन्त्रितानि स्वरविशिष्टानि ५० पादादीनामपवादः ५१ आदिस्व-रितानि ५२ एकाक्षराणि स्वरितानि ५३ अनुदात्तानि स्वरि-तानि ५४ द्वियकाराण्युत्तमे ५५ सर्वलिङ्गवचनेष्वसमासे तन्वोपस्पृशतेति ५६ चत्वारि द्वैप्रश्न पञ्चपद्यामन्तोदात्तादीनि यादुकारस्य सर्वत्र ५७

इति तृतीयः पादः

आथर्वणे प्रातिशाख्यमूलसूत्रे

प्रथमः प्रपाठकः समाप्तः

द्वितीयः प्रपाठकः

कन्यला १ एकारो विभक्त्यादेशश्छन्दसि २ सचतिरन्यत्र ३ आकमिति मकारलोपः ४ शकल्येष्यादिषु पररूपम् ५ ईकारोकारौ च सप्तम्यर्थे ६ पूर्वमित्यस्मिन्नर्थे सयकारम् ७ यकारलोपः पत्ययान्तरं वा ८ अपवादो वा ९ वृषभ इति देवताख्यानम् १० अस्तेः प्रैषण्या मध्यमस्यैकवचनम् ११ इत्येतेरिहीत्यन्यत्र १२ परस्तात् पुरस्तादन्यानि १३ ऐका-रान्तान्याकाराबाधे १४ यान्याकारोपधानि मकारान्तानि ता-नि स्त्रियैकवचनानि ह्रस्वोपधानि पुंवचनानि १५

इति प्रथमः पादः

ऊष्मान्तानि स्वरान्ताबाधानि १६ लोपसंदेहे १७ तृतीया-संदेहे सान्ताच्च १८ आकारान्ताच्च प्रत्ययलोपिनः १९ आ-ख्यातं गकारान्तादेव २०-१ भूतेऽद्यतन्या मध्यमस्यैक-वचनम् २०-२ एना अनुदात्तम् २१ ऊष्मान्तानि सकारे परतः संयोगादौ च २२ शकारादौ च २३ विश्वा विसर्जनी-यान्ताः २४ स्वरान्तान्यूष्मान्ताबाधानि २५ एना अन्तोदा-त्तम् २६ स्वरान्तानि सकारे परतः संयोगादौ च २७ गोपा मे स्तमभूतं गोपा इति द्विवचने २८ एकवचनद्विवचन-बहुवचनान्यूष्मान्तानि २९ प्रपाकृपादेवगोपेत्यतोऽन्यानि पा इत्यूष्मान्तानि ३० भूरिधाराशतधारामधुधारा इत्येकवचना-नि ३१ स्त्रीबहुवचनान्यूष्मान्तानि ३२ स्तनयन्नेति वृष्ट्या पर्जन्यस्य वृष्ट्याभीपतो वृष्ट्या इति तृतीयान्तानि ३३ ग्रा-ह्यामित्रान्ग्राह्या गृहा ग्राह्यैनं विध्यामीति ३४ एना पृथिव्या पृथिव्योरसा सं त्वादधामि पृथिवीं पृथिव्या दिवा पृथिव्या इति ३५ ता वो नामानि सिन्धवस्त्वं ता विश्वा यस्ता वि-जानादा घा ता गच्छान्त्सर्वा ता यम आर्पिता इति नपुंसकब हुवचनानि ३६

इति द्वितीयः पादः

प्रो दीर्घः ३७ भूतेऽङ्गस्यादितः ३८ छन्दसि ३९ अदन्तस्य ४० एष स व्यञ्जने ४१ एकादेशे तु ४२ आकारात् ४३ कृदन्ते अन्यवर्णान्ताच्च ४४ एना एहा आदयः प्रकृत्या ४५ ते प्रगृह्यमध्ये भूतादिभ्यः पतिरुत्तरपदमाद्युदात्तम् ४६ द्वियकाराणि ४७ द्विजकारे ४८ द्विलकारम् ४९ द्विप-काराणि ५० द्वितकाराणि ५१ द्विनकाराणि ५२ एका-

रान्तानि ५३ नानापदानि ५४ अभ्यासस्य ५५ अकारान्तानि प्रैषराया मध्यमस्यैकवचनानि ५६ नैगमी तकाराबाधे ५७ स्वरितान्तान्युदात्तसंहितान्युदात्तेनैकादेशे ५८ प्रतिषेधे उदात्तोऽस्मदादेशे ५९ ङकारावग्रहाणि ६० नकारावग्रहे प्रकृतिभावश्च ६१ मकारावग्रहाणि ६२ सु इत्येतेनोपसर्गेण ६३ स्वशब्देन ६४

इति तृतीयः पादः

ददातेः ६५ इति सार्वधातुके ६६ रयिं दा इति भूते ६७ समानाधिकरणे समानार्थे पदव्यवायेऽप्यस्मै शतादीनि चान्तोदात्तानि ६८ लुप्तशेषेणावग्रहः प्रकृत्यादेशश्च ६९ दन्तपादहृदयोदकनासिकासहसमानरात्रिजायादारुमासः पुंसि शेकृच्छ्रमावद्गम्भीरमिति ७० नलोपे च पादस्य ७१ दीर्घायुत्वायादिषु च ७२ पातयतेर्दीर्घोपधस्य ७३ पादयतिरन्यत्र ७४ पद्यतिरन्यत्र ७५ सयकाराणि ७६ तमित्यस्मिन्नर्थे ७७ अञ्चत्यन्तं प्रथमान्तमुत्तमे परतो द्विधा । उत्तमा उत्तमेष्विति ७८ तकारान्ते ७९ नकारान्तानि मकाराबाधे ८० मकारान्तानि ८१ नकारान्तानि ८२

इति चतुर्थः पादः

आथर्वणे प्रातिशाख्यमूलसूत्रे

द्वितीयः प्रपाठकः समाप्तः

अथ तृतीयः प्रपाठकः

रेफप्रकृतिघोषवत्स्वरेषु १ अव्ययानि च २ आमन्त्रित ओकार इतावनार्षे प्रकृत्या ३ अपिपूर्वो दधातिः ४ आम्रेडित-

समासस्य ५ अनाम्रेडितान्याम्रेडितसदृशानि ६ षत्वण-त्वोपाचारदीर्घत्वसमापत्तेः ७ कृणोत्विति ८ मतौ ह्रस्वः ९ संहितायां विसर्जनीयस्य १० उत्तममुदात्तम् ११ उत्तर-पदे ह्रस्वः १२ आद्यक्षर वृद्धिः १३ यकारादौ बहुलं दीर्घः १४ गविष्टौ गवेषण इति न लोपो वकारस्य १५ शपथेय्यं सहशेय्यायेत्येकारात्परो यकारः १६ पूर्वपरौ ह्रस्वौ १७ अकारेकारावागमौ पूर्वस्य १८ विधेमेत्यन्यत्र १९ अकारा-न्तान्विति २० एकारान्ताच्च २१ ओकारान्ताच्च २२

इति प्रथमः पादः

उत्पूर्वो हृषिः २३ एकवचनान्यन्यत्र २४ तकारान्तानि २५ ङ्यन्ताद्वा सुर्न लुप्यते कृदन्ताद्वा २६ एकारादीन्येतेर्ह्यस्त-न्याम् २७ आख्यातेन विग्रह उपसर्गेण च २८ अव्ययेन च २९ यथाशास्त्रं क्रमः संयोगे ३० रेफमध्ये तकारः ३१ रेफमध्ये सकारः ३२ ख्यातौ ख्ययौ शुश्रुषीति बाधौ शुचेः ३३ यकारान्तः संयोगः ३४ हकारान्तः संयोगः ३५ तमौ ३६ गमौ ३७ कनौ ३८ पनौ ३९ ककारादिः संयोगः ४० रेफादिः संयोगः ४१ कृत्तीर्दूर्शानीतीकारः ४२ यो अश्व्येनेति यकारः ४३ विकारेऽवयवे वा ४४ हैरण्यैरिति णयौ ४५ ताम्रधूम्रा इति मरौ ४६ नद्यो वेशन्त्या इवेत्य-यकारम् ४७ त्वष्ट्रेव रूपमिति तृतीयान्तम् ४८ अपरुध्म इति धमौ ४९ कल्मलिः कुल्मलमिति लमौ ५० सत्ते द्वितकारम् ५१ आर्द्रहस्ता समङ्त इति रेफङकारादिः संयो-गः ५२ तिर्यमिति तिरौ ५३ ऋभ्वाणं मातरिभ्वरीति भवौ ५४ अन्तवञ्चा समन्ते प्र यद्धन्दिष्ठो जिह्वां नि तृन्धीति

नकारादिः ५५

इति द्वितीयः पादः

नकारस्य विसर्जनीयः ५६ नकारस्य रेफः ५७ ह्रस्वोपधस्य तवर्गे प्रकृत्या ५८ दीर्घोपधः सप्तधातु विसर्जनीयस्य ५९ यथापरु समासे सकारः कपयोः ६० पञ्चम्याः परौ ६१ विसर्जनीयस्य सकारः ६२ षत्वस्यापवादः ६३ अनुपसर्गात्षकारः ६४ पूर्वपदात् ६५ उपसर्गस्योत्तरपदे दीर्घः ६६ अनिङ्ग्येषूत्तरपदे दीर्घ इङ्ग्येषु च ६७ अभ्यासस्य दीर्घः छन्दसि ६८ अश्वादीनां मतौ ६९ सर्वलिङ्गवचनेषु च ७० प्रथमस्य ७१ द्वितीयस्य ७२ सात्रासाहादीनामुत्तरपदाद्यस्य ७३ नामेत्यस्य ह्रस्वान्तमसमासे ७४ निपाताव्ययानामुत्तरपदाद्यस्य ७५

इति तृतीयः पादः

अञ्चतौ लुप्तप्रत्यये नेङ्ग्यते ७६ देवताद्वन्द्वे दीर्घाद्भिर्भ्याभ्यःस्सु ७७ समस्तमेकाक्षरं वृद्ध्या ७८ एकाक्षरमवर्णान्तम् ७९ स्वरलिङ्गस्वरविभक्तिवचनविशेषेषु ८० वर्णलिङ्गस्वरविभक्तिवाक्यव्यत्ययश्छन्दसि ८१ वर्णलोपागमह्रस्वदीर्घप्लुतात्मनेभाषापरस्मैभाषा अपियन्त्यपियन्ति ८२

इति चतुर्थः पादः

इति तृतीयः प्रपाठकश्च
आथर्वणे संहितालक्षणग्रन्थे
प्रातिशाख्यमूलसूत्रं समाप्तम्

अथर्ववेदप्रातिशाख्य
शौनकीया चतुराध्यायीका
ॐ नमः सरस्वत्यै नमः
ॐ नमो ब्रह्मवेदाय
अथर्वाङ्गिरसः

चतुर्णां पदजातानां नामाख्यातोपसर्गनिपातानां सन्ध्यपद्यौ गुणौ प्रातिज्ञम् १
एवमिहेति च विभाषाप्राप्तं सामान्ये २
पदान्त्यः पद्यः ३
अन्लृकारः स्वरः पद्यः ४
लकारविसर्जनीयौ च ५
स्पर्शाः प्रथमोत्तमाः ६
न चवर्गः ७
प्रथमान्तानि तृतीयान्तानीति शौनकस्य प्रतिज्ञानं न वृत्तिः ८
अधिस्पर्शं च ९
द्वितीयचतुर्थाः सोष्माणः १०
उत्तमा अनुनासिकाः ११
श्वासोऽघोषेष्वनुप्रदानः १२
नादो घोषवत्स्वरेषु १३
समानयमेऽक्षरमुच्चैरुदात्तम् १४
नीचैरनुदात्तम् १५
आक्षिप्तं स्वरितम् १६
स्वरितस्यादितो मात्रार्धमुदात्तम् १७
मुखे विशेषाः करणस्य १८
कण्ठ्यानामधरकण्ठः १९
जिह्वामूलीयानां हनुमूलम् २०
तालव्यानां मध्यजिह्वम् २१
मूर्धन्यानां जिह्वाग्रं प्रतिवेष्टितम् २२
षकारस्य द्रोणिका २३
दन्त्यानां जिह्वाग्रं प्रस्तीर्णम् २४
ओष्ठ्यानामधरौष्ठम् २५

नासिक्यानां नासिका २६
अनुनासिकानां मुखनासिकम् २७
रेफस्य दन्तमूलानि २८
स्पृष्टं स्पर्शानां करणम् २९
ईषत्स्पृष्टमन्तःस्थानाम् ३०
ऊष्मणां विवृतं च ३१
स्वराणां च ३२
एके स्पृष्टम् ३३
एकारौकारयोर्विवृततमम् ३४
ततोऽप्याकारस्य ३५
संवृतोऽकारः ३६
संस्पृष्टरेफमृवर्णम् ३७
दीर्घप्लुतयोः पूर्वा मात्रा ३८
सलकारम् लृवर्णम् ३९
संध्यक्षराणि संस्पृष्टवर्णान्येकवर्णवद्वृत्तिः ४०
नैकारौकारयोः स्थानविधौ ४१
विसर्जनीयोऽभिनिष्टानः ४२
व्यञ्जनविधारणमभिनिधानः पीडितः सन्नतरो हीनश्वासनादः ४३
स्पर्शस्य स्पर्शेऽभिनिधानः ४४
पदान्तावग्रहयोश्च ४५
लकारस्योष्मसु ४६
ङणनानां हकारे ४७
आस्थापितं च ४८
अतोऽन्यत्संयुक्तम् ४९
पूर्वरूपस्य मात्रार्धं समानकरणं परम् ५०
ह्रस्वं लघुसंयोगे ५१
गुर्वन्यत् ५२
अनुनासिकं च ५३
पदान्ते च ५४
परस्य स्वरस्य व्यञ्जनानि ५५

संयोगादि पूर्वस्य ५६
पद्यं च ५७
रेफहकारक्रमजं च ५८
एकमात्रो ह्रस्वः ५९
व्यञ्जनानि च ६०
द्विमात्रो दीर्घः ६१
त्रिमात्रः प्लुतः ६२
षट्पुरसोरुकारोऽन्त्यस्य दशदाशयोरादेशश्च मूर्धन्यः ६३
कृपे रेफस्य लकारः ६४
न कृपादीनाम् ६५
लकारस्य रेफः पादमङ्गुलिमित्येवमादीनाम् ६६
नकारमकारयोर्लोपे पूर्वस्यानुनासिकः ६७
यरोष्मापत्तौ च ६८
अनुनासिकस्य च पूर्वेणैकादेशे ६९
पुरुष आ बभूवां इत्यवसाने ७०
ऋवर्णस्य रेफात्परं यत् ७१
उकारस्येतावपृक्तस्य ७२
दीर्घः प्रगृह्यश्च ७३
ईकारोकारौ च सप्तम्यर्थे ७४
द्विवचनान्तौ ७५
एकारश्च ७६
अस्मे युष्मे त्वे मे इति चोदात्ताः ७७
अमी बहुवचनम् ७८
निपातोऽपृक्तोऽनाकारः ७९
ओकारान्तश्च ८०
आमन्त्रितं चेतावनार्षे ८१
आर्त्नी इवादिष्विवादितिः परः ८२
अनुनासिकोऽन्तःपदे ह्रस्वः ८३
दीर्घो नपुंसकबहुवचने ८४
पांसुमांसादीनाम् ८५

हनिगम्योः सनि ८६
शान्मान्दानाम् ८७
वस्वन्तस्य पञ्चपद्याम् ८८
ईयसश्च ८९
विदेश्च ९०
पुंसश्च ९१
वर्णादन्त्यात्पूर्व उपधा ९२
स्वरोऽक्षरम् ९३
सोष्मणि पूर्वस्यानुष्मा ९४
आन्तर्येण वृत्तिः ९५
खणवखा३इ खैमखा३इ इत्याकारादिकारोऽनुदात्तः ९६
अवशा आबभूवाँ इतीतावेकारोऽप्लुतः ९७
व्यञ्जनान्यव्यवेतानि स्वरैः संयोगः ९८
समानपदेऽनुत्तमात्स्पर्शादुत्तमे यमैर्यथासंख्यम् ९९
हकारान्नासिक्येन १००
रेफादूष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थमित्येके अन्यस्मिन्व्यञ्जने चतुर्थमष्टमं वा १०१ - १०२
तदेव स्फोटनः १०३
पूर्वस्वरं संयोगाविघातश्च १०४
खणवखा३इ खैमखा३इ मध्ये तदुरीदं भूया३इदा३मित्यूर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिशः पुरुष आ बभूवाँ३ पराञ्चमोदनं प्राशी३ः प्रत्यञ्चा३मिति त्वमोदनं प्राशी३स्त्वामोदुना३इति वशेया३मशे३इति यत्तदासी३दिदं नु ता३दितीति प्लुतानि १०५

चतुराध्यायिकायां च प्रथमोऽध्याया समाप्ता

संहितायाम् १
पदान्तानामनुत्तमानां तृतीया घोषवत्स्वरेषु २
पदान्ते चाघोषाः ३
अघोषेषु च ४
उत्तमा उत्तमेषु ५

द्वितीयाः शषसेषु ६
तेभ्यः पूर्वचतुर्थो हकारस्य ७
टकारात्सकारे तकारेण ८
ङणनेभ्यः कटतैः शषसेषु ९
नकारस्य शकारे ञकारः १०
चवर्गीये घोषवति ११
टवर्गीये णकारः १२
तकारस्य शकारलकारयोः परसस्थानः १३
चटवर्गेयोश्च १४
ताभ्यां समानपदे तवर्गीयस्य पूर्वसस्थानः १५
षकारान्नानापदेऽपि १६
तवर्गीयाच्छकारः शकारस्य १७
लोप उदः स्थास्तम्भोः सकारस्य १८
रेफस्य रेफे १९
स्पर्शादुत्तमादनुत्तमस्यानुत्तमे २०
स्वराद्यवयोः पदान्तयोः २१
नाकाराद्वकारस्य २२
गविष्टौ गवेषण इति च २३
लेशवृत्तिरधिस्पर्शं शाकटायनस्य २४
पुमो मकारस्य स्पर्शेऽघोषेऽनूष्मपरे विसर्जनीयोऽपुंश्चादिषु २५
नकारस्य चटतवर्गेष्वघोषेष्वनूष्मपरेषु विसर्जनीयः २६
आकारोपधस्योपबद्धादीनां स्वरे २७
वृक्षां वनानीति वकारे २८
नाम्युपधस्य रेफ ऋतूँरुत्सृजते वशीत्येवमादीनाम् २९
न समैरयन्तादीनाम् ३०
मकारस्य स्पर्शे परसस्थानः ३१
अन्तःस्थोष्मसु लोपः ३२
ऊष्मस्वेवान्तःपदे ३३
नकारस्य च ३४
उभयोर्लकारे लकारोऽनुनासिकः ३५

न समो राजतौ ३६
संध्ये च वकारे ३७
वर्गविपर्यये स्फोटनः पूर्वेण चेद्विरामः ३८
न टवर्गस्य चवर्गे कालविप्रकर्षस्त्वत्र भवति तमाहुः कर्षण इति ३९
विसर्जनीयस्य परसस्थानोऽघोषे ४०
स्वरे यकारः ४१
नाम्युपधस्य रेफः ४२
घोषवति च ४३
आवः करकश्च वि वरबिभरसर्वनाम्नः ४४
द्वार्वारिति ४५
अजहातेरहाः ४६
एकामन्त्रिते रौद्विवचनान्तस्य ४७
अन्तः पुनः प्राप्तः सनुतः स्वरव्ययानाम् ४८
स्वर्षाश्च ४९
अहर्नपुंसकम् ५०
न विभक्तिनूपरात्रिरथंतरेषु ५१
ऊधोऽम्नोभुवसाम् ५२
अकारोपधस्योकारोऽकारे ५३
घोषवति च ५४
आकारोपधस्य लोपः ५५
शेपहर्षणीं वन्दनेव वृक्षम् ५६
एषः स व्यञ्जने ५७
न सस्पदीष्ट ५८
दीर्घायुत्वायादिषु ५९
दुर उकारो दाशे परस्य मूर्धन्यः ६०
श्रुति तकारः ६१
समासे सकारः कपयोरनन्तःसद्यःश्रेयश्छन्दसाम् ६२
निर्दुराविर्हविरसमासेऽपि ६३
त्रिः ६४
कुरुकरंकरत्कृणोतुकृतिकृधिष्वकर्णयोः ६५

ततस्परौ ब्रह्मपरे ६६
पञ्चम्याश्चाङ्गे भ्यःपर्यादिवर्जम् ६७
दिवस्पृथिव्यां सचतिवर्जम् ६८
पृष्ठे च ६९
यः पतौ गवामस्याःपरवर्जम् ७०
षष्ठ्याश्चाशच्याः ७१
इडायास्पदे ७२
पितुः पितरि ७३
द्यौश्च ७४
आयुः प्रथमे ७५
प्रे मुषिजीवपरे ७६
परिधिः पतातौ ७७
निवतस्पृणतौ ७८
मनस्पापे ७९
रायस्पोषदिषु च ८०
अत्र नाम्युपधस्य षकारः ८१
सहेः साड्भूतस्य ८२
तद्धिते तकारादौ ८३
युष्मदादेशे तैस्त्वमादिवर्जम् ८४
तत्तानग्रादिषु च ८५
स्तृतस्वस्वपिषु ८६
नामिकरेफात्प्रत्ययसकारस्य ८७
स्त्रैषूयम् ८८
नलोपेऽपि ८९
उपसर्गाद्धातोः ९०
अभ्यासाच्च ९१
स्थासहिसिचीनामकारव्यवायेऽपि ९२
अभ्यासव्यवायेऽपि स्थः ९३
परमेभ्योऽनापाके ९४
अपसव्याभ्यां च ९५

अग्नेः स्तोमसोमयोः ९६
सुजः ९७
त्र्यादिभ्यः ९८
ऋकारात्तात्सदेः ९९
बर्हिपथ्यप्सुदिविपृथिवीति च १००
हिदिविभ्यामस्तेः १०१
न सृपिसृजिस्पृशिस्फूर्जिस्वरतिस्मरतीनाम् १०२
गोसन्यादीनां च १०३
अध्यभिभ्यां स्कन्देः १०४
परेः स्तृणातेः १०५
रेफपरस्य च १०६
अभि स्याम पृतन्यतः १०७

इति द्वितीयोऽध्यायः समाप्तः

सहावाडन्ते दीर्घः १
अष्ट पदयोगपद्मपर्णदंष्ट्रचक्रेषु २
व्यधावप्रत्यये ३
उञ इदमूष्वादिषु ४
ओषधेरपञ्चपद्याम् ५
जीवन्तीमोषधीम् ६
साढः ७
बहुलं रात्रेः ८
विश्वस्य नरवसुमित्रेषु ९
शुनः पदे १०
उपसर्गस्य नामिनो दस्ति ११
वर्तादिषु १२
अकारस्याभ्यासस्य बहुलम् १३
जीहीडाहम् १४
साह्याम १५
विद्मादीनां शरादिषु १६

बहुलं मतौ १७
इछायां च यकारादौ १८
तृतीयान्तस्य १९
रलोपे २०
नारकादीनां प्रथमस्य २१
दीदायादीनां द्वितीयस्य २२
सात्रासाहादीनामुत्तरपदाद्यस्य २३
ऋत वृधवरीवानेषु २४
अध त्यंधीःपरवर्जम् २५
पदान्ते व्यञ्जनं द्विः २६
ङणना ह्रस्वोपधाः स्वरे २७
संयोगादि स्वरात् २८
न विसर्जनीयः २९
सस्थाने च ३०
रेफहकारौ परं ताभ्याम् ३१
शषसाः स्वरे ३२
प्रगृह्याश्च प्रकृत्या ३३
एना एहा आदयश्च ३४
यवलोपे ३५
केवल उकारः स्वरपुर्वः ३६
नमौ संध्यौ ३७
आकारः केवलः प्रथमं पूर्वेण ३८
स्वरे नामिनोऽन्तःस्था ३९
संध्यक्षराणामयवायावः ४०
पूर्वपरयोरेकः ४१
समानाक्षरस्य सवर्णे दीर्घः ४२
सीमन्ते ह्रस्वः ४३
अवर्णस्येवर्ण एकारः ४४
उवर्ण ओकारः ४५
अरमृवर्णो ४६

उपर्षन्त्यादिषु च ४७
उपसर्गस्य धात्वादावारम् ४८
भूतकरणस्य च ४९
एकारैकारयोरैकारः ५०
ओकारौकारयोरौकारः ५१
शकल्येष्यादिषु पररूपम् ५२
एकारौकारान्तात्पूर्वः पदादेरकारस्य ५३
क्वचित्प्रकृत्या ५४
एकारौकारौ पदान्तौ परतोऽकारं सोऽभिनिहितः ५५
इकारयोः प्रश्लिष्टः ५६
अनुदात्तपूर्वात्संयोगाद्यवान्तात्स्वरितं परमपूर्वं वा ज्ञात्यः ५७
अन्तःस्थापत्तावुदात्तस्यानुदात्ते क्षैप्रः ५८
अन्तःपदेऽपि पञ्चपद्याम् ५९
ऊकारस्य सर्वत्र ६०
ओण्योश्च ६१
व्यञ्जनव्यवेतस्तैरोव्यञ्जनः ६२
विवृत्तौ पादवृत्तः ६३
अवग्रहे सविधः ६४
अभिनिहितप्राश्लिष्टजात्यक्षैप्राणामुदात्तस्वरितोदयानामणुमात्रा निघाता वि-
कम्पितं तत्कवयो वदन्ति ६५
एकादेश उदात्तेनोदात्तः ६६
उदात्तादनुदात्तं स्वर्यते ६७
व्यासेऽपि समानपदे ६८
अवग्रहे च ६९
नोदात्तस्वरितपरम् ७०
स्वरितादनुदात्त उदात्तश्रुतिः ७१
व्यासेऽपि समानपदे ७२
अवग्रहे च ७३
स्वरितोदात्तेऽनन्तरमनुदात्तम् ७४
ऋवर्णरेफषकारेभ्यः समानपदे नो णः ७५

पूर्वपदाद्द्रुघणादीनाम् ७६
अकारान्तादह्नः ७७
विभक्त्यागमप्रातिपदिकान्तस्य ७८
उपसर्गाद्धातोर्नानापदेऽपि ७९
प्रपराभ्यामेनः ८०
पुनर्णयाम सि ८१
नवतेश्च ८२
पूर्याणः ८३
दुर्णान्मः ८४
अवग्रहादृकारात् ८५
न मिनाति ८६
भानोश्च ८७
परेर्हिनोतेः ८८
पदान्तस्पर्शयुक्तस्य ८९
नशेः षान्तस्य ९०
स्वरलोपे हन्तेः ९१
क्षुभ्नादीनाम् ९२
व्यवाये शसलैः ९३
चटतवर्गैश्च ९४
पदेनावर्जिते च ९५
तुविष्टमः ९६

इति तृतीयोऽध्यायः

उपसर्ग आख्यातेनोदात्तेन समस्यते १
अनेकोऽनुदात्तेनापि २
अनर्थकर्मप्रवचनीयान्ययुक्तौर्विग्रहोऽभिवितन्वादिषु ३
पूर्वेणाभिविपश्याम्यादिषु ४
योनावध्यैरयन्तादिषु च ५
आशीर्बभूवेति प्लुतस्वरस्य सिद्धत्वात् ६
पूर्वेणावग्रहः ७

यातुमावत् ८
समासे च ९
उपजाते परेण १०
सुप्राव्या च ११
अनिङ्गेन पूर्वेण १२
तद्धिते धा १३
त्राकारान्ते १४
थानेकाक्षरेण १५
तरतमयोः १६
मतौ १७
वकारादौ च १८
शसि वीप्सायाम् १९
तातिलि २०
उभयाद् द्युभि २१
मात्रे च २२
विश्वाद्दानीमि २३
मयेऽसकारात् २४
के व्यञ्जनात् २५
त्वे चान्तोदात्ते २६
कृत्वे समासो वा नानापददर्शनात् २७
जातीयादिषु च २८
यादाविछायां स्वरात्कर्मनामतन्मानिप्रेप्सुषु २९
वस्ववस्वप्नसुम्नसाधुभिर्या ३०
भिर्भ्यांभ्यः सु ३१
सौ च ३२
न दीर्घात् ३३
विनामे च ३४
वसौ ह्रस्वात् ३५
तेनैवोपसृष्टेऽपि ३६
उपसर्गेणावकारे ३७

समन्तः पूरणे ३८
अनतौ विसंभ्यां प्राणाख्या चेत् ३९
काम्याम्रेडितयोः ४०
इवे च ४१
मिथोवगृह्ययोर्मध्यमेन ४२
समासयोश्च ४३
द्विरुक्ते चावगृह्ये ४४
वसुधातरः सहस्रसातमेति वसुसहस्राभ्याम् ४५
सुभिषक्तमस्तमे ४६
न तकारसकाराभ्यां मत्वर्थे ४७
यत्तदेतेभ्यो वतौ ४८
देवताद्वन्द्वे च ४९
यस्य चोत्तरपदे दीर्घो व्यञ्जनादौ ५०
षोडशी संदेहात् ५१
अहोरात्रे ५२
अञ्चतिजरत्पर्वसु ५३
समुद्रादिषु च ५४
वृद्धेनैकाक्षरेण स्वरान्तेन ५५
अवर्णान्तेनैकाक्षरेण प्रतिषिद्धेनाप्रयावादिवर्जम् ५६
प्राणति प्राणन्ति ५७
संपरिभ्यां सकारादौ करोतौ ५८
सर्वस्मिन्नेवागमसकारादौ तुविष्टमवर्जम् ५९
विश्पतिर्विश्पत्नी ६०
ददातौ च तकारादौ ६१
उदो हन्तिहरतिस्थास्तम्भिषु ६२
दधातौ च हकारादौ ६३
जास्पत्यम् ६४
मनुष्यत् ६५
त्रेधा ६६
संज्ञायाम् ६७

व्यधौ ६८
दृशौ सर्वनाम्नैकारान्तेन ६९
सहावाडन्ते ७०
अव्ययानाम् ७१
आशा दिशि ७१
प्रकृतिदर्शनं समापत्तिः ७३
षत्वणत्वोपाचारदीर्घटुत्वलोपान्पदानां चर्चापरिहारयोः समापत्तिः ७४
पूर्वपदनिमित्तानां च ७५
इंग्यानाम् ७६
अन्येनापि पर्वणा ७७
क्रमे परेण विगृह्यात् ७८
दीर्घस्य विरामे ७९
चतूरात्रोऽवग्रह एव ८०
पदान्तविकृतानाम् ८१
अभ्यासविनतानां च ८२
स्त्रैषूयं नार्षदेन दुष्टरं त्रैष्टुभं त्रैहायणाज्ज्ञास्पत्यम् ८३
अभ्यासस्य परोक्षायाम् ८४
वावृधानप्रभृतीनां च ८५
कृपिरुपिरिषीणामनह्वानाम् ८६
जीहीडाहम् ८७
साह्याम ८८
दीदायत् ८९
नारकादीनाम् ९०
च्यावयतेः कारितान्तस्य ९१
यावयतेराख्याते ९२
वनियमिश्रथिग्लापि ९३
नाष्टनः ९४
हिनोतेः ९५
बोधप्रतीबोधौ केसरप्राबन्धाया अभ्यघायन्ति पनिष्पदातिष्ठिपं दाधार जागार मीमायेति ९६

प्रपणः पणतेरेव ९७
इदमूष्वादिषु पदत्वात् ९८
ब्रह्मण्वत्यादीनाम् ९९
दीर्घायुत्वादीनां च १००
वेदाध्ययनं धर्मः १०१
प्रेत्य ज्योतिष्टं कामयमानस्य १०२
याज्ञिकैर्यथासमाम्नातम् १०३
यज्ञततिर्न पृथग्वेदेभ्यः १०४
यज्ञे पुनर्लोकाः प्रतिष्ठिताः १०५
पञ्चजना लोकेषु १०६
पदाध्ययनमन्तादिशब्दस्वरार्थज्ञानार्थम् १०७
क्रमाध्ययनं संहितापददाढ्यार्थम् १०८
स्वरोपजनश्चादृष्टः पदेषु संहितायां च १०९
द्वे पदे क्रमपदम् ११०
तस्यान्तेन परस्य प्रसंधानम् १११
नान्तगतं परेण ११२
त्रीणि पदान्यपृक्तमध्यानि ११३
एकादेशस्वरसंधिदीर्घविनामाः प्रयोजनम् ११४
आकारौकारादि पुनः ११५
उकारः परिहार्य एव ११६
प्रगृह्यावगृह्यसमापाद्यान्तगतानां द्विर्वचनं परिहार इतिमध्ये ११७
द्वाभ्यामुकारः ११८
अनुनासिकदीर्घत्वं प्रयोजनम् ११९
प्लुतश्चाप्लुतवत् १२०
अनुनासिकः पूर्वश्च शुद्धः १२१
यथाशास्त्रं प्रसंधानम् १२२
प्रगृह्यावगृह्यचर्चायां क्रमवदुत्तरस्मिन्नवग्रहः १२३
समापाद्यानामन्ते संहितावद्वचनम् १२४
तस्य पुनरास्थापितं नाम १२५
स एकपदः परिहार्यश्च १२६

इति शौनकीये चतुराध्यायिके चतुर्थः पादः